# Document Information

Text title : dhanalakShmI stotram
File name : dhanalaxmii.itx
Location : doc_devii
Author : Traditional
Language : Sanskrit
Subject : philosophy/hinduism/religion
Transliterated by : http://www.webdunia.com
Proofread by : Sridhar - Seshagiri <seshagir at engineering.sdsu.edu>
Latest update : December 29, 2001
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org

# ॥ धनलक्ष्मीस्तोत्रम् ॥

## ॥ धनलक्ष्मीस्तोत्रम् ॥

धनदा उवाच
देवी देवमुपागम्य नीलकण्ठं मम प्रियम् ।
कृपया पार्वती प्राह शङ्करं करुणाकरम् ॥

देव्युवाच
ब्रूहि वल्लभ साधूनां दरिद्राणां कुटुम्बिनाम् ।
दरिद्र दलनोपायमञ्जसैव धनप्रदम् ॥

शिव उवाच
पूजयन् पार्वतीवाक्यमिदमाह महेश्वरः ।
उचितं जगदम्बासि तव भूतानुकम्पया ॥

स सीतं सानुजं रामं साञ्जनेयं सहानुगम् ।
प्रणम्य परमानन्दं वक्ष्येऽहं स्तोत्रमुत्तमम् ॥

धनदं श्रद्धानानां सद्यः सुलभकारकम् ।
योगक्षेमकरं सत्यं सत्यमेव वचो मम ॥

पठन्तः पाठयन्तोऽपि ब्रह्मणैरास्तिकोत्तमैः ।
धनलाभो भवेदाशु नाशमेति दरिद्रता ॥

भूभवांशभवां भूत्यै भक्तिकल्पलतां शुभाम् ।
प्रार्थयत्तां यथाकामं कामधेनुस्वरूपिणीम् ॥

धनदे धनदे देवि दानशीले दयाकरे ।
त्वं प्रसीद महेशानि! यदर्थं प्रार्थयाम्यहम् ॥

धराऽमरप्रिये पुण्ये धन्ये धनदपूजिते ।
सुधनं र्धामिके देहि यजमानाय सत्वरम् ॥

रम्ये रुद्रप्रिये रूपे रामरूपे रतिप्रिये ।
शिखीसखमनोमूर्त्ते प्रसीद प्रणते मयि ॥

आरक्त-चरणाम्भोजे सिद्धि-सर्वार्थदायिके ।
दिव्याम्बरधरे दिव्ये दिव्यमाल्यानुशोभिते ॥

समस्तगुणसम्पन्ने सर्वलक्षणलक्षिते ।
शरच्चन्द्रमुखे नीले नील नीरज लोचने ॥

चञ्चरीक चमू चारु श्रीहार कुटिलालके ।
मत्ते भगवती मातः कलकण्ठरवामृते ॥

हासाऽवलोकनैर्दिव्यैर्भक्तचिन्तापहारिके ।
रूप लावण्य तारूण्य कारूण्य गुणभाजने ॥

क्वणत्कङ्कणमञ्जीरे लसल्लीलाकराम्बुजे ।
रुद्रप्रकाशिते तत्त्वे धर्माधरे धरालये ॥

प्रयच्छ यजमानाय धनं धर्मैकसाधनम् ।
मातस्त्वं मेऽविलम्बेन दिशस्व जगदम्बिके ॥

कृपया करुरागारे प्रार्थितं कुरु मे शुभे ।
वसुधे वसुधारूपे वसु वासव वन्दिते ॥

धनदे यजमानाय वरदे वरदा भव ।
ब्रह्मण्यैर्ब्राह्मणैः पूज्ये पार्वतीशिवशङ्करे ॥

स्तोत्रं दरिद्रताव्याधिशमनं सुधनप्रदम् ।
श्रीकरे शङ्करे श्रीदे प्रसीद मयिकिङ्करे ॥

पार्वतीशप्रसादेन सुरेश किङ्करेरितम् ।
श्रद्धया ये पठिष्यन्ति पाठयिष्यन्ति भक्तितः ॥

सहस्त्रमयुतं लक्षं धनलाभो भवेद् ध्रुवम् ।
धनदाय नमस्तुभ्यं निधिपद्माधिपाय च ।
भवन्तु त्वत्प्रसादान्मे धन-धान्यादिसम्पदः ॥

॥ इति श्री धनलक्ष्मी स्तोत्रं सम्पूर्णम् ॥

Visit http://www.webdunia.com for additional texts with Hindi meanings.

